॥श्रीगणेशाय॰॥ततोगंगातीरेगत्वा॥देशकालौस्मृत्वममशरीरशुद्ध्यर्थंगणस्ना
नं॰॥स्नात्वाचम्य॥उत्सर्जनांगत्वेनभस्मगोमयमृत्तिस्नानं॰॥भस्ममादाय॥
ईशानायनमःशिरसि॥तत्पुरुषाय॰मुखे॥अघोराय॰हृदये॥वामदेवाय॰गु
ह्ये॥सद्योजाय॰पादयोः॥प्रणवेनसर्वांगे॥स्नात्वाचम्य॥गोमयमादाय॥गं
धद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं॥ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रि
यं॥अग्रमग्रंचरंतीनांओषधीनांवनेवने॥तासांऋषभपत्नीनांपवित्रंकायशो
धनं॥तन्मेरोगांश्चशोकांश्चनुदगोमयसर्वदा॥इतिसर्वांगानिविलिप्य
स्नात्वाचम्य॥वल्मिकांपर्वतानांस्थितिविशेषपृथिवी॥मयामृत्तींप्रवस्ति
अग्निरितिभस्म वायुरितिभस्म जलमितिभस्म स्थलमितिभ
स्म व्योमेतिभस्म [illegible] तेतिसर्वांगे आपोहिष्ठा॰

मन्त्राजिनोषिमरिति॥भ्रमिंभ्राष्य॥मावैरिषःस्वनितायसैन्यहंस्वनेमिवः॥
हिपचतुंष्पदस्माकंसर्वेमस्वनातुरं॥स्वनिःयः॥स्योनापृथिवीभवानृक्षरानि
वेशनी॥यच्छानःशर्मसप्रथः॥मृदमादाय॥आयनेतेपरायणेदूर्वारोहंतुपु
ष्पिणीः॥हृदाश्चपुंडरीकाणीसमुद्रस्यगृहाइमे॥गामश्वानृदमस्युक्ष्य॥मृ
मैनिधाय॥त्रातारमिंद्रमवितारमिंद्रंहवेहवेसुहवंशूरमिंद्रं॥ह्वया
मिशक्रंपुरुहूतमिंद्रंस्वस्तिनोमघवाधात्विंद्रः॥पूर्ववत्॥पुमान्पुंसोनंसतुत
यमायंजुहुतान्हविः॥यमंहयज्ञोगच्छत्यग्निदूतोअरंकृतः॥दक्षिणा०॥तत्वा
यामिब्रह्मणावंदेमानस्तदाशास्तेयजमानोहविर्भिः॥अहेळमानोवरुणेह ॥१॥

वो ध्युरुशंसमानः आयुः प्रमोषीः ॥ पश्चिमतः ॥ वयं सोम व्रते तव मनस्तनुषु
बिभ्रतः ॥ प्रजावंतः सचेमहि ॥ उत्तरे ॥ तस्यूर्ध्व रोदसी उभे दोषा वस्तोरुपब्रु
वे ॥ भोजेषु स्मा अस्मभ्यं रासदा ॥ उपरि ॥ अधः पश्यस्व मोपरि संतरां पादकौ हर ॥ मा ते कशप्लकौ दृशन् स्त्री हि ब्रह्मा बभूविथ ॥ अधः ॥ सहस्रशीर्षो
रुधू । शिरसि ॥ अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि ॥ यक्ष्मं शी
र्षण्यं मस्तिष्काज्जिह्वाया विवृहामि ते ॥ मुखे ॥ ग्रीवाभ्यस्त उष्णिहाभ्यः की
कसाभ्यो अनूक्यात् ॥ यक्ष्मं दोषण्यं ॥ अंसाभ्यां जिह्वाया विवृहामि ते ॥ ग्रीवा
यां ॥ आंत्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि ॥ यक्ष्मं मतस्नाभ्यां यक्नः प्लाशि

बाहुभ्यां विवृहामिते २

भ्यो विरूंहामिते ॥ हृदये ॥ नाभ्या नाभिंन आददे० ऋ० नाभौ ॥ त्वमिंद्र सुजोषसमु
क्थं बिभर्षि बाह्वोः ॥ जैवेत्रिशोणान् ओजसा ॥ बाह्वोः ॥ सोमानं स्वरणं० ऋ० ॥ क
क्ष्योः ॥ यः कुक्षिः सोमपातमः ० ऋ० ॥ कुक्ष्योः ॥ बह्वीनां पिताबहुरपुत्रः श्चिश्चा
कृणोति समनावगत्य ॥ इषुधिः संकाः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसू
तः ॥ पृष्ठे ॥ ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्यां ॥ यक्ष्मं श्रोणिभ्यां भास
दां संससो विरूंहामि ते ॥ ऊर्व्योः ॥ मेहनाद्वनंकरणाल्लोमभ्यस्ते नखेभ्यः ॥ यक्ष्मं
स्मा सर्वस्मादात्मनस्तमिदं वि० ॥ जान्वोः ॥ एतावानस्यति ऋ० पादयोः ॥ यस्य विश्वा
नि हस्तयोः पंच क्षितीनां वसू ॥ स्पार्शो यस्य यो अस्मध्रुग्दिव्येवाशनिर्जहि ॥ ह ॥२॥

स्तयोः॥ अंगोदंगाल्लोम्नोल्लोम्नोजातंपर्वणिपर्वणि॥ यक्ष्मंसर्वस्मादात्मनस्तमिदंवि०॥ इतिमं
त्रेणपुरुषसूक्तेनसर्वांगेविलिप्य॥ अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरा॥ शिरसाधा
रयिष्याभिरक्षस्वमांपदेपदे॥ भूमिर्धेनुर्धरणीलोकधारणी॥ उद्धृतासिवराहेण कृष्णे न
नशतबाहुना॥ मृत्तिकेहनमेपापंयन्मयादुष्कृतंकृतं॥ मृत्तिकेब्रह्मदत्तासिकाश्यपे
नाभिमंत्रिता॥ मृत्तिकेदेहिमेपुष्टिंत्वयिसर्वंप्रतिष्ठितं॥ मृत्तिकेप्रतिष्ठितेसर्वंतन्मेनि
र्णुदमृत्तिके॥ त्वयाहतेनपापेनगच्छामिपरमांगतिं॥ इतिसतिलकुयवमुदंशिरसिनि
धाय॥ स्नात्वा॥ तीर्थंप्रार्थयेत्॥ हिरण्यशृंगंवरुणंप्रपद्येतीर्थंमेदेहियाचितः॥ यन्म
याभुक्तमसाधूनांपापेभ्यश्चप्रतिग्रहः॥ यन्मेमनसावाचाकर्मणावादुष्कृतंकृतं॥ त
न्नइंद्रोवरुणोबृहस्पतिःसविताचपुनंतुपुनःपुनः॥ नमोग्नयेप्सुमतेनमइंद्रायनमोव
रुणायनमोवारुण्यैनमोद्भ्यः॥ यदपांक्रूरंयदमेध्यंयदशांतंतदपगच्छतात्॥ अत्याशना

म

दंतीपानाद्य अरं मातिपानानु।। तन्नोवरुणोराजापाणिनाह्यवमर्शतु।। सोहमपापोविरजो
निर्मुक्तोमुक्तकिल्बिषः।। नाकस्यपृष्ठमारुह्यगच्छेब्रह्मसलोकतां।। यश्चाप्सुवरुणःसपु
नात्वघमर्षणः।। अवतेहेळोवरु०।। उदंतन्याभिरसमानमुद्भियोः क्राम्लुसिपुंमलतुं
तिनुयः।। सर्पिजीर्णामिवत्वचं जातोतिपापंसशरीरस्रोभ्युपेत्य।। मपद्येवरुणंदवमंभ
सांपतिमूर्जितं।। याचितंदेहिमेतीर्थं सर्वपापापनुत्तये।। याःप्रवतोवरु०।। इमंमेगंगेय
मुनेवरु०।। गंगागंगेति०गच्छति।। सद्यःपातकसंहर्त्री सद्योदुःखविनाशनी।। सुखदामो
क्षदागंगागंगैवपरमागतिः।। सुमित्रियानआपओषधयःसंतु।। दुर्मित्रियास्तस्मैसंतुयो
स्मान्द्वेष्टियंचवयंद्विष्मः।। समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः।।
इंद्रोयावज्रीवृषभोरराद तात्रापोदेवीरिहमामवंतु।। याआपोदिव्याउतवास्रवंतिख
नित्रिमाउतवायाःस्वयंजाः।। समुद्रार्थायाःशुचयःपावकास्ताआपो०।। यासांराजाव ।।अ

रुणो यातिम। ध्येसत्यानृते अवपश्यं जनानां॥ मधुश्चुतः शुचयो याः पावकास्ता आपो देवी०॥ या
सु राजा वरुणो यासु सोमो विश्वे देवा यासूर्जं मदंती॥ वैश्वानरो याः स्वग्निः प्रविष्टः स्ता आपो देवी
॥ एतेन्विंद्रं स्तव० सिसाषसि॥ तरत्समंदी धावति० आपयोस्लिंग्नातं ततना० तरत्स० त्रिभिष्ट्वं
देवसवितः० उत्तमं हविः॥ उपप्रियं पनिप्नतं यु० जातवेदा मूर्जयंत्या पुनातु॥ आपो हि ष्ठा
मयोभुवः० यथा चनः॥ इमं मे गंगे इत्यस्य सिंधुक्षित्प्रैयमेधो गंगादिनद्यो जगती जलौ
लोऽ० इमं मे गंगे ऋचू॥ ऋतं चेतित्यस्याघमर्षण ऋषिः भाववृत्तो देवता अघम० ऋतं० ३
प्रवाहाभिमुखस्त्रिर्मज्जेद्॥ स्नानांगतर्पणं कुर्यात्॥ ॐ ब्रह्मादयो ये देवाः॥ तान्देवांस्तर्प
यामि॥ भूर्देवां० भुवर्दे० स्वर्देवां० भूर्भुवः स्वर्देवां०॥ सनद्वैपायनादयो ये ऋषयः॥ तान् ऋषिं०
भूरृषीं० भुवरृषीं० स्वरृषीं० भूर्भुवः स्वरृषीं०॥ अग्निष्वात्ताः कव्यवाहनादयो ये पितरः
तान्पितॄं० भूः पितॄं० भुवः पितॄं० स्वः पितॄं० भूर्भुवः स्वः पितॄं०॥ अग्निदग्धाश्च ये जीवा ये प्य०

गर्भांजलितटे निक्षिप्य ॥ पन्मयाद्दूषितं तोयं ॥ यक्ष्मतर्पणं सत्व ॥ ऋषीन्पूजयेत् ॥ ऋषीन्दर्भम
यं कृत्वा पूजयेत्तर्पयेत्ततः ॥ आचम्य उत्सर्जनांगत्वेन करिष्यमाणोपाकर्मांगत्वेन अरुंधतीसहि
तसप्तऋषीपूजनं करि० ॥ द्वादशांगुलप्रमाणकुशसदर्भान्गृहीत्वा चतुरंगुलमग्रं विलायकु
शाग्रंथीन् ॥ ऋषेमंत्रकृतां स्तोमैः कश्यपोद्वर्धयन्गिरः ॥ सोमं नमस्यराजानं यो जज्ञे वीरुधां
पतिं० कश्यपं आवाहयामि ॥ अत्रिर्यहोमवृरोतेनून्वीसमजौत्सवीना धेमानेवयोषा ॥ त्र्ये
नस्यचिज्जवेसान्ततेनेनागच्छतमश्विना त्रंतमेन ॥ अत्रेनमः ॥ एवानस्पृचः समेजासमस्थिं
द्रारंधिमिपरीरदैवीः ॥ विद्यामवस्तोरवेसागृणंतो भरद्वाजाउतनइंद्रनूनं ॥ भरद्वा० ॥ प्रसं
तो भक्षमकराचरूनावपिस्तोमं चेमंप्रथमः सूरिरुन्मृजे ॥ सूतेसातेनयत्यागमं वां प्रति विश्वा
मित्रजमदग्नीदमे ॥ विश्वा० ॥ अग्निस्वागोतमागिरा० ॥ गौतमाय० ॥ गृणानाजमदग्निना० ॥
जमदग्नये० ॥ उतासिमैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोधिजातः ॥ द्रप्सं स्कन्नं ब्रह्मणादै ॥४॥

देवार तस्यां [illegible] पं दद्यातिपर
ब्रह्मोमन्त्र ।। इति मंत्रेणा पंचोपचार पूजां कृत्वा



यैर्न विश्वे देवाः पुष्करेत्वाददंत ।। वसिष्ठाय० ।। अत्रेर्यथानसूयास्या द्वसिष्ठस्याप्यरुंधती ।। कौशि
कस्य यथा सती तथा त्वमपि भर्तरि ।। अरुंधत्यै० ।। सप्तऋषयः ज्ञाना श्रेष्ठाः सर्वेषां तु शुभावहाः
सर्वे पापं व्यपोहंतु ज्ञानतोऽज्ञानतो कृतं ।। तदस्तु मित्रावरुणा० गृहेशैवे प्रतिष्ठा सूक्तं० ।। पंचोपचार
पूजां कृत्वा ।। अनया पूजा अरुंधती सहित सप्तऋषः प्रीयतां ।। कश्यपं तर्पयामि ।। अत्रिं० भरद्वा
जं० विश्वामित्रं० गौतमं० जमदग्निं० वसिष्ठं० अरुंधतीं० ८ ।। सावित्रीं० ब्रह्माणं० श्रद्धां० मेधां० प्र
ज्ञां० धारणां० सदसस्पतीं० अनुमतिं० छंदांस्य ऋषीन्० अग्निं० असूरणासूर्यान्० अग्निं० राधुं
तं० अ० मित्रावरुणौ० अ० अपस्त० अ० मरुतस्त० अ० विश्वान्देवां० अ० इंद्रासोमौ० तां ।। इंद्र०
अग्नामरुतस्त० पवमानसोम० सोमं० अग्निं० संज्ञानं० ।। प्रजापतिस्त० ब्रह्मा० वेदा० देवास्त०
ऋषय० सर्वाणि छंदांसि० ओंकार० वषट्कार० व्याहृतय० सावित्री० यज्ञा० द्यावापृथिवी० प्ये०
अंतरिक्ष० अहोरात्राणि० संख्या० सिद्धा० समुद्रा० नद्य० गिरय० क्षेत्रौषधिव० नागा० वयां

गावस्तृ० साध्या० विप्रा० यक्षा० रक्षांसि० भूतानि० एवमंतानि० अथ ऋषयः उपवीति ॥ शतर्चिन०
माध्यमा० गृत्समद० विश्वामित्र० वामदेव० अत्रि० भरद्वाज० वसिष्ठ० प्रगाथा० महासूक्ता०
प्राचीनावीति ॥ सुमंतु जैमिनि० जानंती। बाहवी। गार्गी वाचक्नवी। वाडवा प्रातीथेयी। सुल-
भा मैत्रेयी। कहोडं० कौषीतकं० महाकौषीतकं० पैंग्यं० महापैंग्यं० सुयज्ञं० सांख्यायनं०
ऐतरेयं० महैतरेयं० शाकलं० बाष्कलं० सुजातवक्त्रं० औदवाहिं० महौदवाहिं० सौजामिं० शौ-
नकं० आश्वलायनं० ये चान्ये आचार्यास्ते सर्वे०॥ आब्रह्मस्तंबपर्यंतं० पित्र्यनोदकं ॥ सव्ये
न वा सव्ये यमादींस्तर्पयेत् ॥ यमं० धर्मराजं० मृत्युं० अंतकं० वैवस्वतं० कालं० सर्वभूतक्षयं०
औदुंबरं० दध्नं० नीलं० परमेष्ठिनं० वृकोदरं० चित्रं० चित्रगुप्तं० यमो निहंता पितृधर्मरा-
जो वैवस्वतो दंडधरश्च कालः ॥ भूताधिपो दत्तकृतानुसारी। कृतांत एतद्दशभिर्जपंति ॥
अकारादिहकारांतान्वर्णाः पठेयुः ॥ शांतिसूक्तं ॥ पर्जन्यसूक्तं ॥ ॥श्री॥ ॥ ॥२